**न प्रकाशादियं भिन्ना छायेवार्कस्य तामसी ।**
**न चाभिन्ना जडत्वेन विरोधान्नोभयात्मिका ॥ १४ ॥**

सदसद्विलक्षणत्वेपि भिन्नाभिन्नत्वाभ्यां सावयवनिरवयवत्वाभ्यां वा युक्तिं सहेतेत्याशङ्क्य निराकरोति—न प्रकाशादिति ॥ यथार्कस्य छाया तामसी रात्रिरूपा अर्काद्भिन्ना न तथेयमिति व्यतिरेकदृष्टान्तः । यद्वा—अर्कस्य छाया अर्काच्छादिका तामसी तमोदृष्टिभिर्दिवान्धैः आरोपिता नार्काद्भिन्ना यथेत्यर्थः । 'परास्य शक्तिः'[1] इति श्रुतौ मायायाः आत्मशक्तित्वावगमात्, न हि शक्तिः शक्तिमतो भेदेन विभाव्यते । नापि चिदात्मनोऽभिन्ना, भिन्नाभिन्ना वा, [1] जडत्वाद्भिन्नत्वाद्विषयत्वानुपपत्तिप्रसङ्गात् जडाजडयोरेकत्वायोगाच्चेत्याह—न चाभिन्नेति ॥ १४ ॥

**स्वहेत्ववयवाभावान्नेयं सावयवोच्यते ।**
**न चावयवहीना सा कार्येष्ववयवान्विता ॥ १५ ॥**

प्रकारन्तरमप्यपाकरोति—स्वहेत्ववयवाभावादिति ॥ अनादित्वादित्यर्थः । तस्या एव कार्याकारत्वात् कार्यस्य च सावयवत्वात् सैव कार्याकारेणावयवान्वितेत्यर्थः । न हि मायाविनिर्मितहस्त्यश्वादि निरवयवं भवतीति भावः ॥ २९ ॥

**अविचारितसिद्धेयं मायावेश्याविलासिनी ।**
**पुरुषं वञ्चयत्येव मिथ्याभूतैस्स्वविभ्रमैः ॥ १६ ॥**

अतः प्रकारन्तराभावात् सिद्धमस्या युक्तिहीनप्रकाशत्वं लक्षणमित्युपसंहरति—अविचारितेति ॥ १६ ॥

---

[1] श्वेताश्व. ६-८.

**न तस्या मूलविच्छेदमभिवाञ्छन्ति केचन ।**
**तेषां पक्षे कथं मोक्षो मनसस्सम्भविष्यति ॥१७॥**

ये वेश्याविलासवञ्चिताः चपलेन्द्रियग्रामाः वेश्यामायाविलासवंचिताः तां न जिहासन्ति तान् शोचन्नाह—न तस्या इति ॥ मूलविच्छेदः सवासनानिवृत्तिः । तदनिवृत्तौ को दोष इति चेत्, संसारदुःखपरम्पराया अनिवृत्तिरित्याह—तेषां पक्ष इति । मनसो मोक्षः मनसस्सकाशान्मोक्षः मनोविलयो वा परमोपशमलक्षितपरमानन्दस्तेषां कथं स्यादित्यर्थः ॥ १७ ॥

**तिस्रोऽप्यवस्था मनसो जाग्रत्स्वप्नसुषुप्तयः ।**
**चक्रवत्परिवर्तन्ते भेदभ्रान्त्येकहेतवः ॥ १८ ॥**

मनोमोक्षाभावे कथं परमानन्दालाभ इत्यत आह—तिस्रोपीति ॥ मनसि सति तस्य मनसः तिस्रोपि जाग्रदाद्यवस्थाश्चक्रवत्परिवर्तन्ते, भेदभ्रान्तेः मुख्यकारणभूता इत्यर्थः । एतदुक्तं भवति—मनसो यदा बाह्येन्द्रियद्वारा बाह्यविषयाकारता भवति तदा जाग्रदवस्था, यदा जाग्रद्दृष्टवासनामात्रतयान्तः प्रविशति तदा स्वप्नावस्था, यदा पुनर्नाडीच्छिद्रप्रचारं परित्यज्य स्वकारणे लीयते तदाऽशेषविशेषवेद्यवेदनाकारप्रविलयात् सुषिप्तिर्भवति । एवं मनसः संचारात् भेदविभ्रमा जायन्ते कर्तृक्रियाकारकफलाश्रया इति ॥१८॥

**ताभिः करोति कर्माणि पुनस्तैर्बध्यते मनः ।**
**मनसः केवलस्साक्षी भानुवत्पुरुषः परः ॥१९॥**

सति च भेदविभ्रमे किं स्यादिति तदाह—ताभिरिति ॥ भेदभ्रान्तिरित्यर्थः । कथं मनसः संसारवर्णनं क्रियते, आत्मन

एव संसारित्वादित्यत आह—मनस इति । मनसोनेकविकारिणः साक्षी पुरुषः केवलो निर्विकारो मनसः परोन्यो, यथा जगत्साक्षी भानुरित्यर्थः । साक्षिणोवस्थासंसारधर्मवत्त्वे तस्यापि साक्ष्यकोटिपतितत्वादसाक्षिकमवस्थात्रयं स्यादिति भावः ॥ १९ ॥

**यथा प्राणिकृतैरर्कः कर्मभिर्नैव बध्यते ।**
**तथा मनःकृतैरात्मा साक्षित्वान्नैव बध्यते ॥ २० ॥**

कर्मसाक्षित्वादेवायं पुरुषः कर्मभिः न लिप्यत इत्याह—यथा प्राणिकृतैरिति ॥ तथा च श्रुतिः 'सूर्यो यथा सर्वलोकस्य चक्षुः'[1] इत्यादिः ॥ २० ॥

**आत्मा करोति कर्माणि बध्यते मुच्यते च तैः ।**
**इत्यौपचारिकी क्लृप्तिर्भ्रममात्रैव केवलम् ॥ २१ ॥**

यद्येवमकर्ताऽभोक्ता चात्मा, कथं तर्हि तस्मिन्वादिनां लोकागमयोश्च कर्तृत्वादिप्रसिद्धिरित्याशङ्क्य जपाकुसुमादिसन्निहिते स्फटिके लौहित्यावभासवत् कर्तृमनआदिसन्निध्युपाधिनिमित्तस्तस्मिन् कर्तृत्वाद्यवभासः, अविवेकाद्वादिलोकागमप्रसिद्धिरुपपद्यत इत्यभिप्रेत्याह—आत्मा करोतीति ॥ २१ ॥

**धूमाभ्रधूळीनीहारैरस्पृष्टोपि दिवाकरः ।**
**यथा छन्न इवाभाति तथैवात्मापि मायया ॥२२॥**

यद्यात्मनो मनआद्युपाधिसम्बन्धाद्यथावदप्रकाशः, तर्हि तस्य कथमसङ्गकूटस्थत्वादिस्वभावतेत्याशङ्क्य दृष्टान्तेन प्रत्याचष्टे—धूमाभ्रेति ॥ मायया मायातत्कार्यैरित्यर्थः ॥ २२ ॥

---

[1]कठो. ५-११.

**यथा लीलावशात्कश्चिद्भ्राम्यमाणः कुमारकः ।**
**भ्रमत्तत्पश्यति जगत् शतचन्द्रं नभस्स्थलम् ॥**

परमार्थत आवृतत्वाभावेप्यात्मनः आवृतत्वप्रतीतिं दृष्टान्तेनोपपाद्य विक्षेपावभासोपि तस्य न परमार्थत इत्यत्र दृष्टान्तमाह— यथा लीलावशादिति ॥ २३ ॥

**तथैव मायया जीवो भ्रामितो वासनावशात् ।**
**नानाकारमिदं विश्वं भ्रममाणं च पश्यति ॥२४॥**

दार्ष्टान्तिकमाह—तथैवेति ॥ वासनावशात् पूर्वपूर्वभ्रमजसंस्कारोद्बोधवशात् । नानाकारं देवतिर्यङ्मनुष्याद्यनेकाकारं भ्रममाणं चञ्चलमित्यर्थः ॥ २४ ॥

**संसृज्य मनसा देवस्संसरन्निव लक्ष्यते ।**
**यथार्को जलसंसर्गाच्चलन्नानेव लक्ष्यते ॥ २५ ॥**

मायया भ्राम्यमाणस्यापि जीवस्य न परमार्थतो भ्रमणमस्तीत्येतद्दृष्टान्तेनोपपादयति—संसृज्य मनसेति ॥ देवः आत्मा । आत्मनो नानात्वप्रतिभासोप्यनेन दृष्टान्तेन मिथ्येत्युपपादित इति दर्शयति—नानेव लक्ष्यत इति । चलन्निव नानेवेति योजना ॥

**योगाभ्यासवशाद्येन मनो निर्विषयं कृतम् ।**
**निवृत्तस्स पुमांत्सद्यो जीवन्मुक्तो भविष्यति ॥२६**

तदेवं मायाद्वारकं जीवस्य चिदात्मनो बन्धमुपवर्ण्य ससाधनं तत्त्वज्ञानद्वारकं मोक्षमाह—योगाभ्यासेति ॥ निर्विषयं कृतं आलम्बनशून्यमविषयब्रह्माकारं कृतमित्यर्थः । अत एव स पुमान्

उपस्थिताद्बाह्यविषयान्निवृत्तस्सन् जीवन्मुक्तः सद्यो निर्विषयात्मज्ञानोदयसमय एव भविष्यतीत्यर्थः ॥ २६ ॥

**द्वा सुपर्णौ च सयुजावभवन्मायया शिवः ।**
**अजामेकां जुषन्नेको नानेवासीदिति श्रुतिः ॥२७॥**

अत्र जीवेश्वरयोर्मायिकभेदानुवादिन्यावृचावुदाहरति—द्वा सुपर्णाविति ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥[1]
अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्'[2]

इत्यादि ॥ २७ ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लास अष्टमोल्लाससंग्रहः ॥ २८ ॥**

अष्टमश्लोकव्याख्यामुपसंहरति—इतीति ॥ २८ ॥

इति श्रीमानसोल्लासवृत्तान्ते अष्टमोल्लासः ॥

---

## नवमोल्लासः

**कथमेवंविधा माया निवर्तेतेति पृच्छतः ।**
**ईश्वरोपासनारूपस्तदुपायः प्रकीर्त्यते ॥ १ ॥**

अधुना यथोक्तात्मेश्वरतत्त्वज्ञानसाधनविधानायोत्तरश्लोक इति सङ्गतिमाह—कथमेवंविधेति ॥ १ ॥

---

[1] मुण्ड. ३-१. [2] याज्ञि १२-५.

**षट्त्रिंशत्तत्त्वरूपासु परमेश्वरमूर्तिषु ।**
**प्रत्यक्षेणोपलभ्यन्ते सर्वैरप्यष्टमूर्तयः ॥ २ ॥**

किमालम्बनेश्वरोपासना कार्या? न हि निरालम्बनोपासना सम्भवति; नच ईश्वरस्वरूपत एव तदालम्बनं भवति, तस्य निराकारत्वेन तदयोगादित्याशङ्क्य प्रपञ्चोपधानकल्पितविग्रहस्येश्वरस्य युक्तमुपासनालम्बनत्वमिति परिहरति—षट्त्रिंशत्तत्त्वरूपास्विति ॥ षट्त्रिंशत्तत्त्वानि शैवागमे प्रसिद्धानि । निर्धारणार्था सप्तमी । आकाशस्यापि मनोगोचरत्वं साक्षिमात्रगोचरत्वं वेति मतमाश्रित्य 'प्रत्यक्षेणोपलभ्यन्ते' इत्युक्तमिति द्रष्टव्यम् ॥ २ ॥

**अनुमेयासु न मनः क्षिप्रमारोहतीत्यतः ।**
**मूर्त्यष्टकमयीं ब्रूते गुरुस्सर्वात्मभावनाम् ॥ ३ ॥**

कथमष्टावेवेमा मूर्तय उपादीयन्ते नान्याः? इत्यत आह—अनुमेयास्विति ॥ गुरुः श्रीशङ्कराचार्यः । प्रकाश्यप्रकाशकातिरिक्तस्य ज्ञेयस्याभावात् तस्याष्टमूर्त्यतिरिक्तत्वाभावात् अत्र वक्ष्यमाणाष्टमूर्तिध्यानमेवेश्वरस्य सर्वात्मभावनेत्यभिप्रेत्योक्तं—सर्वात्मभावनामिति ॥ ३ ॥

**"भूरम्भांस्यनलोनिलोम्बरमहर्नाथोहिमांशुः पुमा-**
**नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।**
**नान्यत्किंचनविद्यते विमृशतां यस्मात्परस्माद्विभो-**
**स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥"**

अहर्नाथः सूर्यः । पुमान् त्रैलोक्यान्तर्यामी पुरुषः । यद्वा—पुमान् भोक्ता । अन्यत्प्रसिद्धम् । इत्येवं यदिदं चराचरात्मकमा-

भाति तत्सर्वं यस्यैव मूर्त्यष्टकं तस्मै इति सम्बन्धः । कथमेतद्विश्वमीश्वरमूर्तिरूपं ईश्वराद्भिन्नत्वादस्य? इत्याशङ्क्याह—नान्यदिति॥ विमृशतां विचारं कुर्वतां यस्मात् परस्मात्सर्वकारणाद्विभोरपरिच्छिन्नादीश्वरादन्यन्न विद्यते, विचार्यमाणे ईश्वरात्पृथक् स्वातन्त्र्येण जगतोऽभावात् सर्वमस्मिन् कल्पितं, अस्यैव शरीरमित्यभिप्रायः । यत्तदोरन्वयः पूर्ववत् ॥ ९ ॥

## अस्यैवं सिद्धान्तः—

**विराड्ढरीरे ब्रह्माण्डे प्राणिनामपि विग्रहे ।**
**षट्त्रिंशत्तत्त्वसंघातस्सर्वत्राप्यनुवर्तते ॥ ४ ॥**

अस्य तात्पर्यतो व्याख्यानप्रपञ्चनामारभते—अस्यैवमिति ॥ अत्रेदं विवक्षितं—अष्टमूर्त्यात्मकं सर्वं जगत्, तच्च महेश्वरविग्रहं षट्त्रिंशत्तत्वात्मकम्, तच्च द्विविधं । अधिदैवमध्यात्मं चेति । तत्राद्यं ब्रह्माण्डं चतुर्दशभुवनात्मकं, द्वितीयं पिण्डात्मकम्, एतयोः कार्यकारणरूपेणाभेदात् । समष्टिब्रह्मण्डावयवान् सर्वान्व्यष्टिपिण्डावयवेषु सम्पाद्य पिण्डावयविनं च ब्रह्मण्डावयव्यात्मना सम्पाद्य महेश्वरं तदात्मतयानुगतं ध्यायन् तस्मिन् स्थिरीकृतान्तःकरणस्तत्प्रसादात्तस्यैव निर्विशेषं तत्त्वं पूर्वश्लोकैरष्टभिः प्रतिपादितं साक्षात्कृत्य कृतकृत्यो भवतीति । तदेतत्सर्वं क्रमेण दर्शयति—विराडित्यादिना ॥ ब्रह्माण्डे समष्टिरूपे; प्राणिनां विग्रहे व्यष्टिरूपे । षट्त्रिंशत्तत्त्वानि द्वितीयश्लोकोल्लासे विवृतानि । [1]पञ्चभूतानि, पञ्चप्राणाः चतुर्दशेन्द्रियाणीति चतुर्विंशतिः; महान्, कालः, प्रधानं, माया, विद्या पुरुष इति षट्, बिन्दुनादौ शक्तिशिवौ शान्तातीताविति षट्; एवं षट्त्रिंशत्तत्त्वानि यानि शैवागमे प्रसिद्धानि तानि सर्वत्र पिण्डे ब्र-

---

[1] ५६. मेपृष्ठे.

ह्माण्डेप्यनुवर्तन्त इत्यर्थः । न हि पिण्डं ब्रह्माण्डातिरिक्तं किंचिदस्ति, तदप्यष्टमूर्तिव्यतिरिक्तं नास्तीति भावः ॥ ४ ॥

**व्याप्तिर्व्यष्टिशरीरेस्मिन् मनसो व्यष्टिरूपिणः ।**
**तस्मात्सर्वात्मकमिदं स्वशरीरं विचिन्तयेत् ॥ ५ ॥**

तत्र पिण्डे ब्रह्माण्डसम्पादनप्रकारं वक्तुं तावन्निमित्तमाह—व्याप्तिरिति ॥ व्यष्टिरूपिणो मनसोस्मिन् व्यष्टिशरीरे व्याप्तिर्यस्मात्तस्मादिति योजना । 'त एते सर्व एव समाः सर्वेनन्ताः'[1] इति वाङ्मनःप्रणाननुक्रम्य हिरण्यगर्भरूपेणाम्नानान्मनसो व्यापकत्वम् । तस्य मनःप्रधानालिङ्गात्मनः समष्टिशरीरस्य तत्कार्यव्यष्टिशरीरे व्याप्त्युपपत्तेश्च तद्द्वारा व्यष्टिपिण्डस्यापि युक्तं सर्वात्मकत्वमिति भावः ॥५॥

**व्यष्ट्युपासनया पुंसस्समष्टिव्याप्तिमाप्नुयात् ।**
**उपसंक्रामतीत्येवं दशकृत्व उपादिशत् ॥ ६ ।**

यस्माच्चैवं पिण्डब्रह्माण्डयोरेकहिरण्यगर्भरूपत्वादत्यन्तमभेदः, तस्मात्पिण्डात्मना महेश्वरोपासनया समष्टिब्रह्माण्डात्मतां लभत इति पिण्डे ब्रह्माण्डसम्पत्तिः कर्तव्येत्याह—व्यष्टीति ॥ पुंसो व्यष्ट्युपासनयेत्यन्वयः । पुंसः परमेश्वरस्य व्यष्टिशरीरान्तरात्मनोपासनयेत्यर्थः । आप्नुयात् उपासक इति शेषः । तत्र प्रमाणमाह—उपसंक्रामतीत्येवमिति । तैत्तिरीयोपनिषत्सु प्रथममध्यात्मं पञ्चकोशानन्नमयादीननुक्रम्यान्ते 'एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतम्मनोमयमात्मानमुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति'[2] इति पञ्चकृत्वस्सङ्क्रमणमानन्दमय-

---

[1] बृ. उ. ३-५-१३. [2] तै. उ. २-८-५.

कोशान्तर्गतसर्वाधारव्यापकब्रह्मप्राप्तिरूपमुक्तम् । तथा भृगुवल्ल्यां चाधिदैवं पञ्चकोशाननुक्रम्यान्ते 'एतमन्नमयमात्मानमुपसङ्क्रम्य'[1] इत्यादिना पञ्चकृत्वः तस्यैव सङ्क्रमणमाम्नातमिति परिच्छिन्नदृष्टेरपि पूर्णात्मविषयतया परिपूर्णप्राप्तिहेतुता प्रमाणसिद्धेत्यर्थः ॥ ६ ॥

**ब्रह्माण्डस्योदरे लोकास्सप्तभूरादयः स्मृताः ।**
**मूलादिब्रह्मरन्ध्रान्तेष्वाधारेषु वसन्ति ते ॥ ७ ॥**

इदानीं सम्पत्तिमनुक्रमते—ब्रह्माण्डस्येति ॥ भूरादयस्सप्त लोकाः ये ब्रह्माण्डस्योदरे स्थिताः वर्तन्ते, ते मूलाधारादिब्रह्मरन्ध्रान्तेषु स्वाधारेषु वसन्ति, मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञासहस्रारेषु क्रमेण भूर्भुवस्स्वर्महर्जनस्तपस्सत्यमित्येते लोका वसन्तीति ध्यायेदित्यर्थः ॥ २ ॥

**वीणादण्डो महामेरुरस्थीनि कुलपर्वताः ।**
**गङ्गा तु पिङ्गळा नाडी यमुनेडा प्रकीर्तिता ॥ ८ ॥**
**सरस्वती सुषुम्नोक्ता नाड्योन्याः पुण्यनिम्नगाः ।**
**द्वीपास्स्युर्धातवस्सप्त स्वेदबाष्पादयोब्धयः ॥९॥**

सम्पूर्णे पिण्डे लोकसंस्थानसम्पत्तिमुक्त्वा तत्रैव भूलोकसंस्थानविशेषप्रकारमाह—वीणादण्ड इति ॥ अन्तस्सुषिरः पृष्ठवंशो वीणादण्डः, स महामेरुः मध्यत्वोन्नतत्वसामान्यात् । तत्पार्श्वास्थीनि कुलपर्वताः पारियात्रादयः, परितो विक्षिप्ततया स्थितत्वात् । गङ्गानदीं पिङ्गळानाड्यां सम्पादयेत्, इडायां यमुनां, सुषुम्नायां सरस्वतीं; पार्श्वयोर्मध्ये च प्रकटगुप्तत्वसामान्यात् नाडीत्रयं नदी-

[1] तै. उ, ३-१०-५.

त्रयात्मना ध्येयमित्यर्थः । अन्यासु नाडीषु सर्वा अन्या नदीः सम्पादयेदित्याह—नाड्योन्या इति । त्वगादयः सप्त धातवो जम्ब्वादिद्वीपा ध्येया इत्यर्थः । स्वेदबाष्पादयः शरीरगाः द्वीपावेष्टितसप्तसमुद्रत्वेन ध्येया इत्यर्थः ॥ ९ ॥

**मूले तिष्ठतिकालाग्निरस्थिमध्ये च बाडबः ।**
**वैद्युतोग्निस्सुषुम्नायां पार्थिवो नाभिमण्डले ॥१०॥**

**हृदि तिष्ठति सूर्याग्निः कपाले चन्द्रमण्डलम् ।**
**नक्षत्राण्यपराण्याहुर्नेत्रादीनीन्द्रियाण्यपि ॥११॥**

मूले मूलाधारे कालाग्निः प्रळयकालानलः, अस्थिमध्ये अस्थिकूटान्तराळे स्वेदाद्यब्धिशोषको बाडबाग्निः तिष्ठतीत्यर्थः । वैद्युतोग्निर्दिव्योग्निस्सुषुम्नायां तिष्ठति क्षणस्फुरणत्वात्, सर्वनाडीषूष्मधाराप्रवर्तकत्वाद्वेत्यर्थः । पार्थिवः पृथिवीधातुशोषणोग्निः, स नाभिमण्डले ध्येय इत्यर्थः । हृदीति प्रसिद्धार्थम् । कपालं ललाटम् । अपराणि नक्षत्राणि चन्द्रव्यतिरिक्तानि अश्विन्यादीनि सप्तविंशतिसङ्ख्यानि, तथा मङ्गळबुधादिग्रहाश्च नक्षत्ररूपेण दृश्यमानाः ते सर्वे नेत्रादीन्द्रियेषु ध्येया इत्यर्थः ॥ ११ ॥

**धार्यन्ते वायुभिर्लोकाः यथा प्रवहणादिभिः ।**
**प्राणादिभिर्दशविधैर्धार्यते वायुभिर्वपुः ॥१२॥**

स्वप्रचारेण ब्रह्माण्डधारकं वायुमन्तश्शरीरे देहधारकप्राणात्मना ध्यायेदित्याह—धार्यन्त इति ॥ प्रवहणसंवहनादिभिः सप्तभिः भेदैरित्यर्थः ॥ १२ ॥

**प्राप्येडापिङ्गळे प्राणो मूलात्सूर्यस्वरूपतः ।**
**नासिकाभ्यां बहिर्गत्वा लीयते द्विषडङ्गुले ॥१३॥**

प्राणस्य दशविधत्वं तत्कार्यनिर्देशनद्वारा दर्शयति—प्राप्येति॥ मूलान्मूलाधारात् उत्थिते इडापिङ्गळे नाड्यौ प्राप्य सूर्यरूपतः सूर्यवदूष्माश्रयस्सन् नासिकाभ्यां द्वाराभ्यां बहिर्देहात् गत्वा द्विषडङ्गुले द्वादशाङ्गुलमात्रदेशे लीयते लयमदर्शनं गच्छतीत्यर्थः ॥१३॥

**अष्टाङ्गुळेन सोमात्मा नाडीभ्यामन्तराविशत् ।**
**मलमूत्रमरुच्छुक्राण्यपानो विसृजेद्बहिः ॥१४॥**

सोमात्मा सन् स एव प्राणोपानं प्रणुदन् अष्टाङ्गुलेन देशेनागत्य नाडीभ्यामिडापिङ्गळारूपाभ्यां नासिकाछिद्राभ्यामन्तश्शरीरमध्ये आविशत् । तत्रापानो वायुर्मलादि बहिर्विसृजेत् गुदद्वारेत्यर्थः ॥१४॥

**अग्नीषोममयो भूत्वा सुषुम्नारन्ध्रमाश्रितः ।**
**आब्रह्मरन्ध्रमुद्गच्छन्नुदानो वर्धते स्वयम् ॥१५॥**

तस्यैवोदानापत्तिमाह—अग्नीषोममय इति ॥ वर्धते विजृम्भते॥

**व्यापयेद्वपुषि व्यानो भुक्तान्नरसमन्वहम् ।**
**सन्धुक्षणं समानस्तु कायाग्नेः कुरुते सदा ॥१६॥**

भुक्तान्नरसं अन्वहं प्रत्यहं य उपरि देहनाडीषु व्यापयेत् विविधमासमन्तात् प्रापयेत्, प्रचारयन् सर्वनाडीर्व्याप्नोतीत्येतत्, स व्यान इत्यर्थः । सन्धुक्षणं प्रज्वलनानुकूलो व्यापारः । कायाग्नेः सदा सन्धुक्षणं कुर्वन् समान इत्यर्थः ॥ १६ ॥

**नागो हिक्काकरः कूर्मो निमेषोन्मेषकारकः ।**
**क्षुतं करोति कृकरो देवदत्तो विजृम्भणम् ॥१७॥**
**स्थौल्यं धनञ्जयः कुर्यान्मृतं चापि न मुञ्चति ।**

श्रुतिप्रसिद्धान् प्राणादिपञ्चवायून् विभज्य योगशास्त्रप्रसिद्धान्नागादीनपरान् पञ्च वायून्विभजते—नागो हिक्काकर इत्यादिना ॥ निमेषोन्मेषणे नेत्रयोः कुर्वन् कूर्म इत्यर्थः । विजृम्भणं तन्द्रीवशात् आस्यविदारणम् । स्थौल्यं देहोपचयम् । मृतं च शवरूपमपि न मुञ्चति, तत्राप्युच्छूनत्वकारणवायुर्धनञ्जय इत्यर्थः ॥

**आकाशो बहिरप्यन्तरवकाशं प्रयच्छति ॥१८॥**

एतावता 'भूरम्भांस्यनलोनिलः' इत्यन्तं व्याख्यातम् । इदानीमम्बरादीन्व्याचक्षाणः तत्सम्पादनं सूचयति—अकाश इति॥१८॥

**चन्द्रार्कौ कालनेतारौ प्राणापानौ शरीरिणाम् ।**
**साक्षी पुरुष इत्येवं मूर्त्यष्टकमिदं वपुः ॥१९॥**

यौ कालनेतारौ सिद्धौ चन्द्रार्कौ तौ शरीरिणां शरीरे प्राणापानौ ध्येयावित्यर्थः । यः साक्षी संघातस्य स पुरुषः पुमानित्युक्त इत्यर्थः । 'इत्याभाति चराचरात्मकम्' इत्येतद्व्याचष्टे—इत्येवमिति ॥ १९ ॥

**समनस्कमिदं योगी सेवमान उपासनम् ।**
**अष्टाङ्गयोगयुक्तस्सन्नमनस्कं स गच्छति ॥२०॥**

एवमष्टमूर्तिस्वरूपं देह एव सम्पाद्य ध्यायतः फलमाह—समनस्कमिति ॥ मनसा व्याप्तत्वात् समनस्कमिदमष्टमूर्तिलक्षणमुपासनं

ध्यानं सेवमानोऽभ्यस्यन् योगी योगनिरतः । कथं योगी? अष्टाङ्गयोगयुक्तस्सन् । सोमनस्कमलिङ्गमीश्वरं गच्छति, तत्पदमाप्नोतीत्यर्थः ॥ २० ॥

**मनःप्रसादस्सन्तोषो मौनमिन्द्रियनिग्रहः ।**
**दया दाक्षिण्यमास्तिक्यमार्जवं मार्दवं क्षमा॥२१॥**
**भावशुद्धिरहिंसा च ब्रह्मचर्यं स्मृतिर्धृतिः ।**
**इत्येवमादयोन्ये च मनस्साध्या यमास्स्मृताः॥२२॥**

इदानीं योगाष्टाङ्गानि विभजते—मनःप्रसाद इत्यादिना ॥ मनस उद्रिक्तसत्त्वावस्थापत्तिः प्रसादः प्रसन्नता, लक्ष्ये विक्षेपाभावेनावस्थितिरिति यावत् । सन्तोषो यदृच्छालाभसन्तुष्टिः । मौनं वृथावागुत्सर्जनत्यागः । इन्द्रियनिग्रहः तद्वशीकरणम् । दया भूतद्रोहाकरणम् । दाक्षिण्यं व्यवहारे दक्षता, आग्रहराहित्यमित्येतत् । आस्तिक्यं शास्त्राद्युक्तविषये विश्वासः । आर्जवमृजुत्वमकुटिलत्वम् । मार्दवम्मृदुत्वमकाठिनत्वम् । क्षमा क्रोधहेतुष्वपि क्रोधपरित्यागः । भावशुद्धिर्वचनोच्चारणादौ मनःशुद्धिः, शुद्धान्तःकरणत्वमिति यावत् । अहिंसा परपीडावर्जनम् । ब्रह्मचर्यमष्टाङ्गमैथुनत्यागः । स्मृतिर्जन्ममृत्युजराव्याधिदुःखदोषानुसन्धानम् । धृतिधैर्यं मनःप्राणेन्द्रियाणामवसादप्राप्तावुत्तम्भनमिति । एवमादयः 'अमानित्वमदम्भित्वमित्यादयः, अन्ये च अद्वेष्टृत्वादयश्च ये मनसः साध्या योगसाधनभूता धर्माः ते इमे यमास्स्मृताः उक्ता विद्वद्भिरित्यर्थः । मनोमात्रसाध्या निवृत्तिलक्षणयोगाङ्गविशेषा यमा इति यमलक्षणमनेनोक्तमिति द्रष्टव्यम् ॥ २२ ॥

**स्नानं शौचं क्रतुस्सत्यं जपो होमश्च तर्पणम् ।**
**तपो दानं तितिक्षा च नमस्कारः प्रदक्षिणम्॥२३**

**व्रतोपवासाद्याश्चान्ये कायिका नियमास्स्मृताः ।**

नियमान् कायसाध्यलक्षणान् योगविशेषानाह—स्नानमिति ॥ स्नानशौचे बाह्ये एव ग्राह्ये, भावशुद्धेर्यमेषूक्तत्वात् । क्रतु-रीश्वरपूजनम् । सत्यं यथार्थवचनम् । तितिक्षा द्वन्द्वसहनम् । व्रतोपवासाद्यास्त[त्त]त्कालोचिताः । अन्येपि ये योगाविरोधिनः आहारविहारादयः कायिकाः कायसाध्याः । उपलक्षणमेतत्, का-यवाक्साध्या इत्यर्थः ॥

**स्वस्तिकं गोमुखं पद्मं हंसाख्यं ब्राह्ममासनम्॥२४**
**नृसिंहं गरुडं कूर्मं नागाख्यं वैष्णवासनम् ।**
**वीरं मयूरं वज्राख्यं सिद्धाख्यं रौद्रमासनम्॥२५॥**
**योन्यासनं विदुश्शाक्तं शैवं पश्चिमतानकम् ।**

आसनान्याह—स्वस्तिकमित्यादिना ॥ स्वस्तिकाद्यासनचतुष्टयं ब्राह्मं ब्रह्मदेवत्यमित्यर्थः । नृसिंहादिचतुष्टयं वैष्णवं विष्णुदेव-त्यम् । वीरादिचतुष्टयं रौद्रं रुद्रदेवत्यम् । योन्यासनं शक्ति-देवत्यं विदुरित्यर्थः । पश्चिमतानकं नामासनं शैवं विदुर्योगिन इति योजना ॥

**निरालम्बनयोगस्य निरालम्बनमासनम् ॥२६॥**
**निरालम्बतया ध्यानं निरालम्बस्सदाशिवः ।**

योगविशेषे चासनविशेषमाह—निरालम्बनेति । निरालम्बनं करचरणादिसंस्थानविशेषनियमालम्बनरहितम् । कोसौ निरालम्ब-योग इत्यपेक्षायामाह—निरालम्बतया ध्यानमिति । को निरालम्ब इत्यत आह—निरालम्बः सदाशिव इति । सदाशिवो निर्वि-

शेषः परमात्मा, तदालम्बनं तस्मिन्मनस्समाधानं निरालम्बनयोग- इत्यर्थः । स्वस्तिकाद्यासनानां लक्षणानि योगग्रन्थेभ्योवगन्तव्यानि ॥

**रेचकः पूरकश्चैव कुम्भकः प्राणसंयमः ॥२७॥**

इदानीं प्राणायामानाह—रेचक इति । रेचकपूरककुम्भकरूप- स्त्रिविधः प्राणनिरोधः प्राणायाम इति तात्पर्यार्थः ॥ २७ ॥

**इन्द्रियाणां समस्तानां विषयेभ्यो निवारणम् ।**
**प्रत्याहार इति प्रोक्तं प्रत्याहारार्थवेदिभिः ॥२८॥**

प्रत्याहारानाह—इन्द्रियाणामिति ॥ स्पष्टोर्थः ॥ २८ ॥

**आधारे क्वापि मनसस्स्थापनं धारणोच्यते ।**

धारणाख्यं योगाङ्गमाह—आधार इति । क्वापि मणिपूरकादिषु चक्रेष्वित्यर्थः । अथ वा—क्वापि शुभविषये हृद्याविष्कृतविष्ण्वा- दिमूर्तावित्यर्थः ॥

**ब्रह्मविष्णुशिवादीनां चिन्ता ध्यानं प्रचक्षते॥२९॥**

ध्यानमाह—ब्रह्मविष्णुशिवादीनामिति ॥ धारणा प्राणेन सह मनसः क्वापि स्थिरीकरणमात्रं, ध्यानं तु विषयविशेषे विष्ण्वादौ मनो- वृत्तिधाराप्रवाह इति भेदः ॥ २९ ॥

**ध्यानादस्पन्दनं बुद्धेः समाधिरभिधीयते ।**
**अमनस्कसमाधिस्तु सर्वचिन्ताविवर्जितम् ॥३०॥**

अष्टममङ्गं समाधिमाह—ध्यानादिति । अयं सविकल्पकः स- माधिः समनस्को ज्ञातृज्ञेयविभागोल्लेखलेशसहितोङ्गमित्यर्थः । एतै- रङ्गैः साध्यं निर्विकल्पकसमाधिरूपं अङ्गिनं योगमाह—अमनस्कस- माधिस्त्विति । सर्वचिन्ता ज्ञातृज्ञेयविभागोल्लेखः, तद्विवर्जितं लय- विक्षेपरहिततया प्रशान्तावस्थमित्यर्थः ॥ ३० ॥

**चित्ते निश्चलतां याते प्राणो भवति निश्चलः ।**
**चित्तस्य निश्चलत्वाय योगं सध्यानमभ्यसेत् ॥३१**

चित्तनैश्चल्यफलमाह—चित्त इति ॥ प्राणनैश्चल्ये चित्तनैश्चल्यं हेतुरुक्तः । चित्तनैश्चल्ये त्वष्टाङ्गयोग एव हेतुः । अतस्तं यत्नेनाभ्यसेदित्याह—चित्तस्येति । सध्यानमिति ध्यानमात्रग्रहणं तत्रादरातिशयद्योतनार्थम् ॥ ३१ ॥

**आकुञ्चनमपानस्य प्राणस्य च निरोधनम् ।**
**लम्बिकोपरि जिह्वायास्स्थापनं योगसाधनम्॥३२॥**

पुनरेकमन्यं योगसाधनमाह—आकुञ्चनमिति ॥ गुदद्वारस्य सङ्कोचनेन वायोरूर्ध्वस्रोतःप्रवर्तनमाकुञ्चनं ; कुम्भकेन प्राणस्य शरीरान्तर्निरोधनं ; लम्बिका तालुमूले स्तनाकारो मांसखण्डः, तदुपरि जिह्वायाः स्थापनं बलान्निरोध इत्येतद्योगस्य चित्तवृत्तिनिरोधलक्षणस्य साधनमुत्कृष्टो हेतुरित्यर्थः ॥ ३२ ॥

**चित्ते निश्चलतां याते प्राणे मध्यपथं* गते ।**
**चिह्नान्येतानि जायन्ते पञ्चभूतजयात्पृथक् ॥३३॥**

इदानीमभ्यासवशीकृतचित्तप्राणस्य योगिनश्चिह्नान्याह—चित्ते निश्चलतां यात इति ॥ पञ्चभूतजयात्पृथगित्यस्यायमर्थः—पादादिजानुपर्यन्तं पृथिवीस्थानं, जान्वादिनाभिपर्यन्तं अपां स्थानं, तदादि कण्ठपर्यन्तं तेजस्स्थानं, ततो भ्रूमध्यपर्यन्तं वायुस्थानं, तत ऊर्ध्वं ब्रह्मरन्ध्रपर्यन्तं आकाशस्थानं, एतेषु धारणाभ्यासक्रमेण एतज्जयादेतानि चिह्नानि भवन्तीति ॥ ३३ ॥

---

*ग—प्राणमध्ये लयं.

**मलमूत्रकफाल्पत्वमारोग्यं लघुता तनोः ।**
**सुगन्धस्स्वर्ण[स्वर]वर्णत्वं प्रथमं योगलक्षणम् ॥३४**

कानि तानीत्यपेक्षायामाह—मलमूत्रेति । प्रथमं योगलक्षणं पृथिव्याख्यप्रथमभूमिकाजयपर्यन्तस्य योगस्य लक्षणमित्यर्थः । एवमुत्तरत्रापि योजना । अत्रास्ति श्वेताश्वतरीयाणां मन्त्रोपनिषत् 'युञ्जानः प्रथमं मनः'[1] इति योगं प्रकृत्य ।

पृथ्व्याप्यतेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥

लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च ।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदान्ति ॥[1]

इति ॥ ३४ ॥

**कण्टकाग्रेष्वसङ्गत्वं जलपङ्केष्व*मज्जनम् ।**
**क्षुत्तृडादिसहिष्णुत्वं द्वितीयं योगलक्षणम् ॥३५॥**

द्वितीयभूमिकाधारणासिद्धिचिह्नान्याह—कण्टकाग्रेष्विति ॥ असङ्गत्वं कण्टकैरवेधनम् ॥ ३९ ॥

**बह्वन्नपानभोक्तृत्वमातपाग्निसहिष्णुता ।**
**दर्शनं श्रवणं दूरात्तृतीयं योगलक्षणम् ॥३६॥**

तृतीयामाह—बह्वन्नेति ॥ ३६ ॥

**मण्डूकप्लवनं भूमौ मर्कटप्लवनं द्रुमे ।**
**आकाशगमनं चेति चतुर्थं योगलक्षणम् ॥३७॥**

चतुर्थलक्षणमाह—मण्डूकप्लवनमिति ॥ ३७ ॥

---

[1] श्वे. उ. २-१२,१३.　　　　*जलसङ्केष्व.

**ज्ञानं त्रिकालविषयमैश्वर्यमणिमादिकम् ।**
**अनन्तशक्तिमत्त्वं च पञ्चमं योगलक्षणम् ॥३८॥**

पञ्चमं योगलक्षणमाह—ज्ञानमिति ॥ अनन्तशक्तिमत्त्वमपरिमितबलवत्त्वम् ॥ ३८ ॥

**प्राणे सुषुम्नां संप्राप्ते नादोन्तश्श्रूयतेष्टधा ।**
**घण्टादुन्दुभिशङ्खाब्धिवीणावेण्वादिताळवत् ॥३९॥**

एवं स्थानविशेषाभिजये चिह्नान्युक्तानि । सुषुम्नायां प्राणनिरोधनेन तत्र मनोवशीकारे चिह्नमाह—प्राणे सुषुम्नां सम्प्राप्त इति ॥ अष्टधात्वमेवाह—घण्टेति । वेण्वादीत्यादिपदात् मृदङ्गादि गृह्यते । एतेषां ध्वनिसदृशा नादा श्रुतिगोचरा भवन्तीत्यर्थः ॥ ३९ ॥

**तनूनपात्तटित्तारातारेशतपनोपमम् ।**
**ब्रह्मनाडीं गते प्राणे बिम्बरूपं प्रकाशते ॥४०॥**

एवं सिद्धे सुषुम्नायां धारणायोगे प्रत्यग्रूपेश्वराविर्भावो भवतीत्याह—तनूनपादिति ॥ तनूनपादग्निः । तटित्सौदामिनी । तारा नक्षत्राणि । तारेशश्चन्द्रः । तपनस्सूर्यः । ब्रह्मनाडीं सुषुम्नाम् । बिम्बरूपं परमेश्वरचैतन्यं क्रमेणाग्न्यादिभासवत् अवभासत इत्यर्थः ॥ ४० ॥

**श्वासाश्चरन्ति यावन्तो मनुष्यस्य दिनं प्रति ।**
**तावन्ति योजनान्यर्कः श्वासेश्वासे प्रधावति॥४१॥**

इदानीं तत्र प्रणवाभिव्यक्तिप्रकारमाह—श्वासाश्चरन्तीति ॥४१

**एकविंशतिसाहस्रं षट्छतं श्वाससङ्ख्यया ।**
**सोहमित्युच्चरत्यात्मा मन्त्रं प्रत्यहमायुषे ॥४२॥**

मनुष्यस्य दिनं प्रति कति श्वासाश्चरन्तीत्यपेक्षायामाह—एक विंशतीति ॥ आ सूर्योदयात् सूर्योदयपर्यन्तं अहोरात्रं यावत्तावत् षट्छताधिकैकविंशतिसहस्रसङ्ख्यं श्वासोच्छ्वासमाचरन् हंसः सोहमिति मन्त्रमुच्चरति स्वभावत एव । किमर्थम्? आयुषे आयुर्वृद्ध्यर्थमित्यर्थः ॥ ४२ ॥

**सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।**
**सन्धिं वै पूर्वरूपाख्यं ततोसौ प्रणवो भवेत् ॥४३॥**

ततः किमित्यत आह—सकारं चेति ॥ सकारे हकारे च लुप्ते ओकारः अकारः बिन्दुश्चावशिष्यते । तत्र पूर्वरूपाख्यं सन्धिं प्रयोजयेत्, अकारमोकारात्मन्येकीकुर्यात् बिन्दुं चोंकारेण योजयेदित्यर्थः ॥ ४३ ॥

**अकारश्चाप्युकारश्च मकारो बिन्दुनादकौ ।**
**पञ्चाक्षराण्यमून्याहुः प्रणवस्थानि पण्डिताः ॥४४॥**

अस्य ओंकारस्य प्रणवाख्यस्यावयवान्विभजते तच्चिन्तनार्थम्—अकारश्चाप्युकारश्चेति ॥ अश्च उश्च ओ, एतदुपरि मकारे योजिते, अयं च मकारः स्वरहीनत्वात् परेण बिन्दुना योज्यः । तदा ओमिति रूपं निष्पद्यते । एतच्च घोषवता प्राणेन एकीकारेण नादेन मूलाधारादुत्थितेन प्राणोष्मसञ्चरणनाडीगतसुषिराभिव्यक्तेन अभिव्यज्यत इति नादावसान उच्यते । एवं प्रणवस्थानि प्रणवशब्दवाच्यपिण्डस्थान्यमूनि पञ्चाक्षराणि, अकार उकारो मकारो बिन्दुश्चेति चत्वारि, नादश्च तेषां सामान्यात्मकः पञ्चममक्षरं, इत्येवं पञ्चाक्षराण्याहुः पण्डिताः आत्मविद्यासु कुशला इत्यर्थः ॥ ४४ ॥

**ब्रह्मा विष्णुश्च रुद्रश्चापीश्वरश्च सदाशिवः ।**
**तेष्वक्षरेषु तिष्ठन्ति षट्त्रिंशत्तत्त्वसंयुताः ॥४५॥**

अथैतेषामक्षराणां क्रमेण देवता आह—ब्रह्मा विष्णुश्चेति ॥ षट्त्रिंशत्तत्त्वसंयुता इति, तान्यपि तत्त्वानि प्रणवान्तर्गतान्येव, न ततो बहिः सन्तीति द्योतयन् प्रणवस्य पूर्णात्मतां ध्वनयति । सर्वं हि वाच्यं वाचकैर्ग्रस्तमवभासते । सर्वं च वाचकं प्रणवाक्षरेण गृह्यते, तस्य सर्वशब्दसामान्यात्मकतया सर्वशब्दव्यापकत्वात् । तथा च श्रुतिः—'तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक्सन्तृण्णोङ्कार एवेदं सर्वम्'[1] इति । 'ओमित्येतदक्षरमिदं सर्वम्'[2] 'सर्वं ह्येतद्ब्रह्म'[2] इत्योङ्कारब्रह्मणोरभेदप्रतिपादनात् पूर्णाद्वितीयब्रह्मात्मकः प्रणवः संवृत्त इति स तथोपास्य इति तात्पर्यार्थः ॥ ४९ ॥

**गुरुप्रसादाल्लभते योगमष्टाङ्गलक्षणम् ।**
**शिवप्रसादाल्लभते योगसिद्धिं च शाश्वतीम्॥४६॥**

इदानीम्

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥[3]

इति श्रुतिमाश्रित्य गुरुदेवतोपासनाधीना सर्वसिद्धिरिति तत्कर्तव्यतां सूचयन्नाह—गुरुप्रसादादिति ॥ योगसिद्धिरात्मतत्त्वाविर्भावः ॥

**सच्चिदानन्दरूपाय बिन्दुनादान्तरात्मने ।**
**आदिमध्यान्तशून्याय गुरूणां गुरवे नमः ॥४७॥**

व्याख्यानान्ते मङ्गळमाचरन्नुक्तप्रणवार्थं प्रकटयति—सच्चिदानन्द-

---

[1]छा. २-२३-४. [2]माण्डू १. [3]श्वेता. ६-२३.

रूपायेति ॥ स्वरूपमुक्तम् । बिन्दुनादान्तरात्मन इति ताभ्यामुपलक्षणीयतया उपलक्षणमुच्यते । एतदुक्तं भवति—सच्चिदानन्दाः अकारोकारमकारात्मकाः प्रणव[वः]ब्रह्मस्वरूपनित्यकूटस्थं च । बिन्दुनादौ तु रूपनामनी आविर्भावतिरोभावधर्मकौ स्तः, उत्पत्तिस्थितिलयाधारं वस्तु गमयत इति प्रणवब्रह्मोपलक्षणमिति । नामरूपात्मकनादबिन्द्वधिष्ठानस्याश्रयान्तरशङ्कामपाकुर्वन्नाह— आदिमध्यान्तशून्यायेति । कोसावेवंविध इत्यत आह—गुरूणां गुरवे नम इति । दक्षिणामूर्तये नम इत्यर्थः ॥ ४७ ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लासे नवमोल्लाससङ्ग्रहः ॥४८॥**

नवमश्लोकव्याख्यामुपसंहरति—इतीति ॥ ४८ ॥

इति श्रीमानसोल्लासवृत्तान्ते नवमोल्लासः.

---

दशमोल्लासः.

**परिच्छिन्नमहम्भावं परित्यज्यानुषङ्गिकम् ।**
**पूर्णाहम्भावलाभोस्य स्तोत्रस्य फलमुच्यते ॥१॥**

उत्तरश्लोकतात्पर्यं संक्षिप्य कथयन् तस्य पूर्वेण सङ्गतिमाह—परिच्छिन्नमिति ॥ आनुषङ्गिकं देहाद्यभिमानानुषङ्गादागतमित्यर्थः । उच्यते, उत्तरश्लोकेनेति शेषः ॥ १ ॥

**"सर्वात्मत्वमितिस्फुटीकृतमिदंयस्मादमुष्मिन्स्तवे**
**तेनास्य श्रवणात्तथार्थमननाद्ध्यानाच्च सङ्कीर्तनात् ।**

**सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं ततः**
**सिद्ध्येत्तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम्॥१०॥**

यस्मादमुष्मिन् स्तवे दाक्षिणामूर्तिस्तोत्रे, इति उक्तप्रकारेण सर्वात्मत्वमिदं प्रत्यक्षं स्फुटीकृतं, तस्मादस्य स्तोत्रस्य श्रवणात् गुरोरर्थतोवगमात्; तथार्थमननात्, यथा श्रुतं तथा अर्थस्य युक्त्या व्यवस्थापनात्; ध्यानात् श्रुतमतार्थाकारवृत्तिनैरन्तर्यकरणाच्च; सङ्कीर्तनात्, केवलं स्तोत्रकीर्तनमात्रादपीत्यर्थः; सर्वात्मत्वलक्षणा या महाविभूतिस्तया सहितमीश्वरत्वं निरुपमितं निरतिशयमीश्वरत्वं स्यात्, स्वतः स्वभावतः. सिद्धं, न प्रयत्नसाध्यं, तस्यानित्यत्वावश्यम्भावादित्यर्थः। यत्पुनः प्रसिद्धमष्टधा परिणतमणिमाद्यैश्वर्यं, तच्च सिद्ध्येदनुषङ्गादेव। तच्चाव्याहतमप्रतिहतम्। अत इदं स्तोत्रमर्थतः पाठतो यत्नेन गुरुभ्योवगम्य तन्निष्ठो भवेत्, मुमुक्षुरभ्युदयार्थी वेत्यर्थः॥ १०॥

**इदमत्राकूतम्—**

**पुत्रपौत्रगृहक्षेत्रधनधान्यसमृद्धयः।**
**अर्वाचीनाश्च सिद्ध्यन्ति स्वर्गपाताळभूमिषु॥२॥**

अस्य व्याख्यां प्रारभते—इदमत्राकूतमिति॥

यद्यप्यस्मात् स्तोत्रात् सर्व एवाभिलषणीयार्था लभ्यन्ते, तथापि बुद्धिमता न क्षुद्रलाभायेदं प्रयोक्तव्यं, किन्तु महाफलाय पारमेश्वरपदायैव; अर्वाचीनानेकफलानि तु प्रसङ्गतो वस्तुमहिम्नैव भविष्यन्तीति तात्पर्यमभिप्रेत्याह—पुत्रपौत्रेत्यादिना॥ स्वर्गे वा पाताळे वा भूमौ वा भविष्यन्त्येव यथाकालं सर्वेर्वाचीनाः फलभेदा इत्यर्थः॥ २॥

**पाके प्रवर्तमानस्य शीतादिपरिहारवत् ।**
**प्रासङ्गिकाश्च सिद्ध्यन्ति स्तोत्रेणानेन सर्वदा ॥३॥**

तत्रासङ्कल्पितस्यापि फलस्यानुषङ्गिणः सिद्धिं दृष्टान्तेनोपपादयति—पाके प्रवर्तमानस्येति ॥ ३ ॥

**ऐश्वर्यमीश्वरत्वं हि तस्य नास्ति पृथक्स्थितिः ।**
**पुरुषे धावमानेपि छाया तमनुधावति ॥ ४ ॥**

एवं तात्पर्यमुक्त्वा स्यादीश्वरत्वमित्युक्तमीश्वरत्वं व्याचष्टे—ऐश्वर्यमीश्वरत्वं हीति ॥ ईश्वरस्य स्वरूपमैश्वर्यं; तस्येश्वरात् पृथक्स्थितिः पार्थक्येनावस्थानं नास्तीत्यर्थः । तत्र दृष्टान्तमाह—पुरुषे धावमान इति ॥ ४ ॥

**अनन्तशक्तिरैश्वर्यं निष्यन्दाश्चाणिमादयः ।**
**स्वस्येश्वरत्वे संसिद्धे सिद्ध्यन्ति स्वयमेव हि ॥५॥**

किन्तदैश्वर्यं यच्छायावदवियुक्तमीश्वरस्य सदेत्यपेक्षायामाह—अनन्तशक्तिरिति ॥ वाचामगोचरमनतिशयं सहजं सामर्थ्यं तदैश्वर्यमित्यर्थः । नन्वणिमादिसिद्धयो ह्यैश्वर्यमिति प्रसिद्धिः, कथमनन्तशक्तिरैश्वर्यमिति ? तत्राह—निष्यन्दाश्चेति । अणिमादयः सिद्धयः ईश्वरशक्तेर्निष्यन्दा विप्रुणमात्राः, तासां परिच्छिन्नत्वात्, अन्येष्वपि तारतम्येन भावात् । तथा च श्रुतिः 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति'[1] इति । तस्मादीश्वरत्वसिद्ध्यर्थमेव स्तोत्रं प्रयोक्तव्यं, नाणिमादिसिद्ध्यर्थं, तस्य तस्मिन्नानुषङ्गिकत्वादित्याह—स्वस्येति ॥ ५ ॥

---

[1]बृह. ६-३-३२.

**यदीयैश्वर्यविप्रुड्भिर्ब्रह्मविष्णुशिवादयः ।**
**ऐश्वर्यवन्तो भासन्ते स एवात्मा सदाशिवः ॥६॥**

तथापि ब्रह्माद्यैश्वर्याय पृथक्प्रयोक्तव्यमित्याशङ्क्य तदप्यस्यैव लेश इत्याह—यदीयेति ॥ विप्रुड्भिः बिन्दुभिः लेशैरिति यावत् । कथं विद्वदैश्वर्यलेशा ब्रह्माद्यैश्वर्यभेदाः, तेषां सदाशिवविभूतित्वादित्याशङ्क्याह—स एवात्मा सदाशिव इति । सदाशिव एवात्मा, आत्मैव सदाशिव इत्यर्थः ॥ ६ ॥

**पुष्पमानयता गन्धो विनेच्छामनुभूयते ।**
**पूर्णाहम्भावयुक्तेन परिच्छिन्ना विभूतयः ॥ ७ ॥**

अतो ब्रह्माद्यैश्वर्यमपि स्वभावमहिम्नैवोपनमते विदुष इत्येतद्दृष्टान्तेनाह—पुष्पमानयतेति ॥ तस्मात्पूर्णात्मनि सदाशिवरूप एव सम्भावना कार्या, न ब्रह्मादिष्विति स्थितं स्तोत्रफलस्तुतेस्तात्पर्यम् ॥ ७ ॥

**अणिमा महिमा चैव गरिमा लघिमा तथा ।**
**प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥**

इदानीमणिमाद्यैश्वर्याणि विभज्य व्युत्पादयन् 'अष्टधा परिणतं चैश्वर्यमव्याहतम्' इत्येतद्व्याचष्टे—अणिमा महिमा चेति ॥ ८ ॥

**अत्यन्तमणुषु प्राणिष्वात्मत्वेन प्रवेशनम् ।**
**अणिमासंज्ञमैश्वर्यं व्याप्तस्य परमात्मनः ॥९॥**

तत्राणिमाख्यां सिद्धिं दर्शयति—अत्यन्तमिति ॥ पुत्तिकापुलकादिप्राणिष्वित्यर्थः ॥ ९ ॥

ब्रह्माण्डादिशिवान्तायाष्षट्त्रिंशत्तत्त्वसंहतेः ।
बहिश्च व्याप्यवृत्तित्वमैश्वर्यं महिमाह्वयम् ॥१०॥

महिमाख्यामाह—ब्रह्माण्डादीति ॥ शिवो विराज्यभिव्यक्तः पुरुषः ॥ १० ॥

महामेरुसमाङ्गस्य समुद्धरणकर्मणि ।
लाघवे* तूलतुल्यत्वं लघिमानं विदुर्बुधाः ॥११॥

लघिमाख्यामाह—महामेरुसमाङ्गस्येति ॥ योगिनो विशेषणमेतत् । इच्छयातिस्थूलतामापन्नस्यान्यैः समुद्धरणे तूलतुल्यत्वं लघिमेत्यर्थः ॥

परमाणुसमाङ्गस्य समुद्धरणकर्मणि ।
गौरवे मेरुतुल्यत्वं गरिमाणं विदुर्बुधाः ॥१२॥

गरिमाख्यामाह—परमाणुसमाङ्गस्येति ॥ अस्यापि सर्वं वैपरीत्येन योजना ॥ १२ ॥

पाताळवासिनः पुंसो ब्रह्मलोकावलोकनम् ।
प्राप्तिर्नाम महैश्वर्यं सुदुष्प्रापम†योगिनाम् ॥१३॥

प्राप्त्याख्यमैश्वर्यं व्युत्पादयति—पाताळवासिन इति ॥ १३ ॥

आकाशगमनादीनामन्यासां सिद्धिसम्पदाम् ॥
स्वेच्छामात्रेण संसिद्धिः प्राकाम्यमभिधीयते॥१४॥

प्राकाम्याख्यां सिद्धिमाह—आकाशगमनादीनामिति ॥ १४ ॥

स्वशरीरप्रकाशेन सर्वार्थानां प्रकाशनम् ।
प्राकाश्यमिदमैश्वर्यमिति केचित्प्रचक्षते ॥१५॥

---

*ख—योगेन. ग—योगिनः. †क—दुष्प्रापमपि.

प्राकाश्यनामकमैश्वर्यमाह—स्वशरीरप्रकाशेनेति ॥ १५ ॥

**स्वेच्छामात्रेण लोकानां सृष्टिस्थित्यन्तकर्तृता ।**
**सूर्यादीनां नियोक्तृत्वमीशित्वमभिधीयते ॥१६॥**

ईशित्वाख्यामाह—स्वेच्छामात्रेणेति ॥ 'जगद्व्यापारवर्जम्'[1] इति न्यायेन यद्यपि विदुषो लोकविषये स्वातन्त्र्यं वारितं, तथापि विश्वामित्रादिवत् ब्रह्माण्डस्थितावेव वापीकूपतटाकनगरीविहारस्थलसृष्ट्याद्यभिप्रायमेतद्द्रष्टव्यम् ॥ १६ ॥

**सलोकपालास्सर्वेपि लोकास्स्ववशवर्तिनः ।**
**तदैश्वर्यं वशित्वाख्यं सुलभं शिव*योगिनाम्॥१७॥**

वशित्वमाह—सलोकपाला इति ॥ १७ ॥

**यस्त्वेवं ब्राह्मणो वेत्ति तस्य देवा वशे स्थिताः ।**
**किं पुनः क्ष्मापतिव्याघ्रव्याळस्त्रीपुरुषादयः ॥१८॥**

शिव†योगिनामुक्तमैश्वर्यं सुलभमित्यत्र प्रमाणश्रुतिमुदाहरति—यस्त्वेवमिति ॥ 'यस्त्वेवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे'[2] इति मन्त्रस्वरूपस्य प्रतिनिर्देशोयम् । योगिनां क्ष्मापत्यादिवशीकरणं कैमुत्यन्यायेनाह—किम्पुनरिति ॥ १८ ॥

**सर्वात्मभावसाम्राज्यनिरन्तरितचेतसाम् ।**
**परिपक्वसमाधीनां किंकिं नाम न सिद्ध्यति॥१९॥**

न परिगणितमैश्वर्यं सर्वात्मभावनामाहात्म्येन, यद्यदभिलषितं तत्तदखिलं भवेदेवेत्याह—सर्वात्मभावेति ॥ १९ ॥

---

[1]ब्रह्मसू. ४—४–१७. [2]तै. आ. ३–१३. *सुर. †सर्व.

**स्तोत्रमेतत्पठेद्धीमान् सर्वात्मत्वं च भावयेत् ।**
**अर्वाचीने स्पृहां मुक्त्वा फले स्वर्गादिसम्भवे॥२०॥**

यद्यप्येवं महिमास्य स्तोत्रस्य, तथापि न तेषु फलेष्वानुषङ्गिकेष्वपि मतिः कार्येत्युपदिशति—स्तोत्रमेतदिति ॥ २० ॥

**स्वर्गादिराज्यं साम्राज्यं मनुते न हि पण्डितः।**
**तदेव तस्य साम्राज्यं यत्तु स्वाराज्यमात्मनि॥२१।**

कुत इत्यपेक्षायामाह—स्वर्गादिराज्यं साम्राज्यमिति ॥ २१ ॥

**सर्वात्मभावनावन्तं सेवन्ते सर्वसिद्धयः ।**
**तस्मादात्मनि साम्राज्यं कुर्यान्नियतमानसः॥२२॥**

स्वर्गादिराज्यं साम्राज्यं कस्मात् पण्डितो न मनुते इत्यत आह—सर्वात्मभावनावन्तमिति ॥ २२ ॥

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥२३**

देवे दक्षिणामूर्त्याख्ये गुरौ च स्वे भक्तिमतोऽस्मिन् स्तोत्रे अधिकारो नान्यस्येति दर्शयति—यस्य देव इति ॥ २३ ॥

**प्रकाशात्मिकया शक्त्या प्रकाशानां प्रभाकरः ।**
**प्रकाशयति यो विश्वं प्रकाशोऽयं प्रकाशताम्॥२४॥**

तदेवमशेषं स्तोत्रं तात्पर्यतो व्याख्याय ग्रन्थप्रचयविघ्नोपशान्तये शिष्टाचारलक्षणं मङ्गळं वस्तुनिर्देशात्मकमाचरति—प्रकाशा-

त्मिकयेति ॥ आदित्यादिप्रकाशानामपि प्रभाकर इत्यर्थः । स्वयमेव प्रकाशतामित्यर्थः ॥ २४ ॥

**इति श्रीदक्षिणामूर्तिस्तोत्रार्थप्रतिपादके ।**
**प्रबन्धे मानसोल्लासे दशमोल्लाससङ्ग्रहः ॥२५॥**

**इति श्रीमच्छङ्करभगवत्पादाचार्यकृत-**
**दक्षिणामूर्तिस्तोत्रभावार्थवार्तिकं**
**सुरेश्वराचार्यकृतं समाप्तम्.**

---

दशमश्लोकव्याख्यामुपसंहरति—इतीत्यादि ॥ २५ ॥

इति श्रीमानसोल्लासप्रबन्धोयं यथामति ।
व्याख्यातो रामतीर्थेन गुरुदेवप्रसादतः ॥
अनेन भगवाञ्छ्रीमद्दक्षिणाशामुखः शिवः ।
प्रीयतां भजतां नित्यं तत्त्वज्ञानप्रदः सताम् ॥

इति श्रीदक्षिणामूर्तिस्तोत्रव्याख्याप्रबन्धः

मानसोल्लासः समाप्तः.

# APPENDIX.

# पञ्चीकरणवार्तिकम्

## श्रीसुरेश्वराचार्यविरचितम्.

ओंकारस्सर्ववेदानां सारस्तत्वप्रकाशकः ।
तेन चित्तसमाधानं मुमुक्षूणां प्रकाश्यते ॥ १

आसीदेकं परं ब्रह्म नित्यमुक्तमविक्रियम् ।
तत्स्वमायासमावेशाद्बीजमव्याकृतात्मकम् ॥ २

तस्मादाकाशमुत्पन्नं शब्दतन्मात्ररूपकम् ।
स्पर्शात्मकस्ततो वायुस्तेजो रूपात्मकं ततः ॥ ३

आपो रसात्मिकास्तस्मात्ताभ्यो गन्धात्मिका मही ।
शब्दैकगुणमाकाशं शब्दस्पर्शगुणो मरुत् ॥ ४

शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज उच्यते ।
शब्दस्पर्शरूपरसगुणैरापश्चतुर्गुणाः ॥ ५

शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही ।
तेभ्यस्समभवत्सूत्रं[1] लिङ्गं सर्वात्मकं महत् ॥ ६

ततः स्थूलानि भूतानि पञ्च तेभ्यो विराडभूत् ।
पञ्चीकृतानि भूतानि स्थूलानीत्युच्यते बुधैः ॥ ७

---

[1]ख. सूक्ष्मं.

पृथिव्यादीनि भूतानि प्रत्येकं विभजेद्द्विधा ।
एकैकं भागमादाय चतुर्धा विभजेत्पुनः ॥ ८

एकैकं भागमेकस्मिन् भूते संवेशयेत्क्रमात् ।
ततश्चाकाशभूतस्य भागाः पञ्च भवन्ति हि ॥ ९

वाय्वादिभागाश्चत्वारो वाय्वादिष्वेवमादिशेत् ।
पञ्चीकरणमेतत्स्यादित्याहुस्तत्त्ववेदिनः ॥ १०

पञ्चीकृतानि भूतानि तत्कार्यं च विराड्भवेत् ।
स्थूलं शरीरमेतत्स्यादशरीरस्य चात्मनः ॥ ११

अधिदैवतमध्यात्ममधिभूतमिति त्रिधा ।
एकं ब्रह्म विभागेन भ्रमाद्भाति न तत्त्वतः ॥ १२

इन्द्रियैरर्थविज्ञानं देवतानुग्रहान्वितैः ।
शब्दादिविषयं ज्ञानं तज्जागरितमुच्यते ॥ १३

*श्रोत्रमध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवतम् ॥ १४

त्वगध्यात्ममिति प्रोक्तं स्प्रष्टव्यं स्पर्शलक्षणम् ।
अधिभूतं तदित्युक्तं वायुस्तत्राधिदैवतम् ॥ १५

चक्षुरध्यात्ममित्युक्तं द्रष्टव्यं रूपलक्षणम् ।
अधिभूतं तदित्युक्तमादित्योत्राधिदैवतम् ॥ १६

जिह्वाध्यात्मं तयास्वाद्यमधिभूतं रसात्मकम् ।
वरुणो देवता तत्र जिह्वायामधिदैवतम् ॥ १७

---

*अत्र श्लोको वा श्लोकार्धो वा गलित इति भाति.

घ्राणमध्यात्ममित्युक्तं घ्रातव्यं गन्धलक्षणम् ।
अधिभूतं तदित्युक्तमश्विनावधिदैवतम् ॥ १८

वागध्यात्ममिति प्रोक्तं वक्तव्यं शब्दलक्षणम् ।
अधिभूतं तदित्युक्तमग्निस्तत्राधिदैवतम् ॥ १९

हस्तावध्यात्मामित्युक्तमादातव्यं च यद्भवेत् ।
अधिभूतं तदित्युक्तमिन्द्रस्तत्राधिदैवतम् ॥ २०

पादावध्यात्ममित्युक्तं गन्तव्यन्तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवतम् ॥ २१

पायुरिन्द्रियमध्यात्मं विसर्गस्तत्र यो भवेत् ।
अधिभूतं तदित्युक्तं मृत्युस्तत्राधिदैवतम् ॥ २२

उपस्थेन्द्रियमध्यात्मं स्त्र्याद्यानन्द[स्य]कारणम् ।
अधिभूतं तदित्युक्तमधिदैवं प्रजापतिः ॥ २३

मनोध्यात्ममिति प्रोक्तं मन्तव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं चन्द्रस्तत्राधिदैवतम् ॥ २४

बुद्धिरध्यात्ममित्युक्तं बोद्धव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं अधिदैवं बृहस्पतिः ॥ २५

अहंकारस्तथाध्यात्ममहंकर्तव्यमेव यत् ।
अधिभूतं तदित्युक्तं रुद्रस्तत्राधिदैवतम् ॥ २६

चित्तमध्यात्ममित्युक्तं चेत्तव्यं तत्र यद्भवेत् ।
अधिभूतं तदित्युक्तं क्षेत्रज्ञोत्राधिदैवतम् ॥ २७

तमोध्यात्ममिति प्रोक्तं विकारस्तत्र यो भवेत् ।

अधिभूतं तदित्युक्तमीश्वरोत्राधिदैवतम् ॥ २८

बाह्यान्तःकरणैरेवं देवतानुग्रहान्वितैः ।
स्वं स्वं च विषयज्ञानं तज्जागरितमुच्यते ॥ २९

येयं जागरितावस्था शरीरं करणाश्रयम् ।
यस्तयोरभिमानी स्याद्विश्व इत्यभिधीयते ॥ ३०

विश्वं वैराजरूपेण पश्येद्भेदनिवृत्तये ।
ज्ञानेन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ॥ ३१

श्रोत्रत्वङ्नयनघ्राणजिह्वादी[धी]न्द्रियपञ्चकम् ।
वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् ॥ ३२

मनो बुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ।
सङ्कल्पाख्यं मनोरूपं बुद्धिर्निश्चयरूपिणी ॥ ३३

अभिमानात्मकस्तद्वदहंकारः प्रकीर्तितः ।
अनुसंधानरूपश्च चित्तमित्यभिधीयते ॥ ३४

प्राणोपानस्तथा व्यान उदानाख्यस्तथैव च ।
समानश्चेति पञ्चैताः कीर्तिताः प्राणवृत्तयः ॥ ३५

खवाय्वग्न्यम्बुक्षितयो भूतसूक्ष्माणि पञ्च च ।
अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः ॥ ३६

एतत्सूक्ष्मशरीरं स्यान्मायिकं प्रत्यगात्मनः ।
करणोपरमे जाग्रत्संस्कारोत्थप्रबोधवत् ॥ ३७

ग्राह्यग्राहकरूपेण स्फुरणं स्वप्न उच्यते ।
अभिमानी तयोर्यस्तु तैजसः परिकीर्तितः ॥ ३८

हिरण्यगर्भरूपेण तैजसं चिन्तयेद्बुधः ।
चैतन्याभासखचितं शरीरद्वयकारणम् ॥ ३९

आत्माज्ञानं तदव्यक्तमव्याकृतमितीर्यते ।
न सन्नासन्न सदसद्भिन्नाभिन्नं न चोभयम् ॥ ४०

न सभागं न निर्भागं न चाप्युभयरूपकम् ।
ब्रह्मात्मैकत्वविज्ञानहेयं मिथ्यात्वकारणात् ॥ ४१

ज्ञानानामुपसंहारो बुद्धेः कारणतास्थितिः ।
वटबीजे वटस्येव सुषुप्तिरभिधीयते ॥ ४२

अभिमानी तयोर्यस्तु प्राज्ञ इत्यभिधीयते ।
जगत्कारणरूपेण प्राज्ञात्मानं विचिन्तयेत् ॥ ४३

विश्वतैजससौषुप्तविराट्सूत्राक्षरात्मभिः ।
विभिन्नमिव संमोहादेकतत्त्वं चिदात्मकम् ॥ ४४

विश्वादिकत्रयं यस्माद्वैराजादित्रयात्मकम् ।
एकत्वेन समं पश्येदन्याभावप्रसिद्धये ॥ ४५

ओङ्कारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ।
वाच्यवाचकताभेदाद्भेदेनानुपलब्धितः ॥ ४६

अकारमात्रं विश्वस्य उकारस्तैजसस्स्मृतः ।
प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४७

समाधिकालात्प्रागेवं विचिन्त्यातिप्रयत्नतः ।
स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४८

अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।

उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ ४९

मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।
चिदात्माहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ५०

परमानन्दसन्दोहवासुदेवोऽहमोमिति ।
ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥ ५१

चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत् ।
पूर्णबोधात्मनासीत पूर्णाचलसमुद्रवत् ॥ ५२

एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः ।
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ ५३

आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवेत्सदा ॥ ५४

यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् ।
न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वाऽवशिष्यते ॥ ५५

कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत्सदा ।
आत्मन्यारूढभावस्तु जगदेतन्न वीक्षते ॥ ५६

कदाचिद्व्यवहारेषु द्वैतं यद्यपि पश्यति ।
बोधात्मव्यतिरेकेण न पश्यति चिदन्वयात् ॥ ५७

किं तु पश्यति मिथ्येदं दिङ्मोहेन्दुविभागवत् ।
प्रतिभासशरीरस्स्यात्तदा प्रारब्धसंचयात् ॥ ५८

तस्य तावदेव चिरमित्यादिश्रुतिरब्रवीत् ।
प्रारब्धस्यानुवृत्तिस्तु मुक्तस्याभासमात्रतः ॥ ५९

सर्वदा मुक्त एव स्यात् ज्ञाततत्त्वः पुमानसौ ।
प्रारब्धशेषभोगस्य संक्षये तदनन्तरम् ॥ ६०

अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ।
चैतन्यममलं शुद्धं मनोवाचामगोचरम् ॥ ६१

वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ।
प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ॥ ६२

इदं प्रकरणं यस्मात् ज्ञातव्यं भगवत्तमैः ।
अमानित्वादिनियमैर्गुरुभक्तिप्रसादतः ॥ ६३

इमां विद्यां प्रयत्नेन योगी सन्ध्यासु सर्वदा ।
समभ्यसेदिहामुत्र भोगानासक्तधीस्सुधीः ॥ ६४

रागद्वेषादिरहितं स्वात्मानं चिन्तयेत्सदा ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यशिष्य-
श्रीमत्सुरेश्वराचार्यविरचितं पञ्चीकरण-
वार्तिकं संपूर्णम्.



# शुद्धपाठपाठान्तरयोस्सूचिनी.

| पुटे. | पङ्क्तौ. | स्थाने. | पाठयम्. |
|---|---|---|---|
| २६ | ६ | संभेदभेदने | संभेदने |
| २८ | ३ | *पाधि नि | पाधिनि |
| ,, | २० | *किञ्चित्कर्ता परमेश्वरः | किञ्चित्कर्ता सर्वकर्ता परमेश्वरः |
| २९ | ८ | *मुखामू | मुखा मू |
| ३५ | ,, | *कृत्याधिक | कृत्यार्थिक |
| ,, | १४ | परात्परा | पश्चात्परा |
| ,, | १६ | परादिति | पश्चादिति |
| ,, | १९ | योगेन | वेगेन |
| ३७ | ८ | *यस्यङ्गी | श्यस्याङ्गी |
| ,, | १६ | *स्थलोपाधि | स्थूलोपाधि |
| ३८ | ८ | पूर्व | देहाः |
| ,, | ११ | वाचि स्तरामि | नाविस्तरमात्मा |
| ,, | १४ | *त्कर्त्तनवच्छिन्न | त्कृतेऽनवच्छिन्ने |
| ३९ | १९ | विशेषाः | विशेषः |
| ४० | १ | *(नित्यद्रव्यगुणकाः)। क | । क |
| ,, | ५ | नेश्वरात्मोपा | नेश्वरोपा |
| ,, | १० | दीश्वरात्मान्वित | दीश्वरान्वित |
| ४१ | १ | *सम्बद्धे | सम्बद्धं |
| ,, | २० | चेतना | चेतनेना |
| ४३ | १२ | त्कारणतत्त्व | त्कारणत्व |
| ४४ | १५ | इत्यर्थः | इत्यन्वयः |
| ४८ | ३ | भवनश्रवणात् | भवनाशंसनश्रवणात् |
| ,, | ६ | *मित्याशङ्क्य | मित्याशङ्क्य |
| ,, | १० | जीवस्यैव | जीवस्यैव |
| ,, | २३ | रीक्षण | रीक्षणं |
| ,, | ,, | क्षमा या | का माया |
| ,, | २४ | साभासो | सा भासेत्यु |
| ५० | १४ | प्राभाकरो | प्रभाकरो |

*एतच्चिह्नयुतमशुद्धं वेदितव्यम्.

| पुटे. | पङ्क्ती. | स्थाने. | पाठयम्. |
|---|---|---|---|
| ५१ | ३ | तत्त्व* विप्रति | तत्त्वभेदे विप्राति |
| ” | ४ | विप्रातिपत्तीर्द | विप्रतिपत्ति द |
| ” | ८ | *षट्पदार्थान् | षट्पदार्थान् काणादाः |
| ” | २१ | का वाक् | कालापः |
| ५२ | १० | संस्काराख्यं | संस्काराख्यं गुणं |
| ” | १९ | *त्वं च गुणत्वाद्यं | त्वगुणतेत्यादि |
| ५३ | २२ | *नादिरपि। | नादिरपि |
| ५४ | १ | मुपष्टभ्य | मवष्टभ्य |
| ” | २ | राजसश्च | राजसश्चेति |
| ” | २१ | *चन्द्रेत्या | चन्द्र इत्या |
| ” | २३ | वरुणा नासत्यौ देवतास्स्मृताः | वरुणनासत्या इति देवताः |
| ५६ | ४ | *विंशतिक | विंशक |
| ” | २५ | *१५-७ | १-५-७ |
| ५८ | २ | परोपाधि | परोपाधिभेद |
| ५९ | १३ | कर्तुं न वा कर्तुं | कर्तुमथाकर्तुं |
| ६२ | १ | *सिद्धात्मत्वे | सदात्मत्वे |
| ६६ | ४ | तेन | तेन आच्छादनेन |
| ” | २२ | दृश्यते | बुध्यते |
| ” | २४ | बाधे | बाधनेन |
| ६७ | ७ | विक्षेप | विक्षेपशक्ति |
| ६९ | १६ | जडांश | जडदृश्यशाबल्यांश |
| ७० | १४ | *सर्वे एवा [एत आ]त्मानो | सर्वे एत आत्मानो |
| ७२ | २ | *वाच्योमीत | वाच्यमिति |
| ” | १४ | *मृदट | मृद्घट |
| ७४ | २ | इत्याद्याशङ्क्य | इत्याशङ्क्य |
| ८२ | ७ | *नाव | न वा |
| ८४ | ११ | प्रवर्तकाभावे | प्रवृत्त्यङ्कुशाभावे |
| ८५ | ७ | *गोळकान्तादिभि | गोळकान्ताभि |
| ८६ | २१ | स्थिते | स्थिरे |
| ८७ | १३ | *नोर्ध्वा(?)न्नमिता | नाध्वोन्नमिता |

*एतच्चिह्नयुतमशुद्धं वेदितव्यम्.

| पुटे. | पङ्क्तौ. | स्थाने. | पाठयम्. |
|---|---|---|---|
| ८८ | २० | सुधोप | सदोप |
| ८९ | ९ | *भवन्ति ॥ | भवन्ति॥इति॥ |
| " | १४ | तदविविक्त | तदभिव्यक्त |
| " | १५ | स्थितम् | स्थितिः |
| ९० | ११ | जः प्रत्ययः सविषयः | जन्यविषयः |
| ९१ | ५ | रूपं च | रूपस्सन् |
| ९२ | १४ | सत्यज्ञानानन्त | श्रुत्वा सत्यज्ञानानन्त |
| ९६ | ७ | न हि खल्वीश्वरः | न कश्चिदीश्वरः |
| " | १२ | न हि खल्विति | न कश्चिदिति |
| " | १४ | *बीजानां परि | बीजानां वा परि |
| १०१ | २४ | *नास्तिकवादो | नास्तिक्यवादो |
| १०२ | १६ | *न्ध्यास्पदो | न्ध्यहमास्पदो |
| १०४ | ६ | बिम्बे तु | बिम्बे न |
| " | ११ | *निषिध्यते | न सिद्ध्यति |
| १०६ | १ | *तदा भिन्नं | तदा सद्यः भिन्नं |
| " | २१ | *युवः स्थविरादि | युवस्थविरादि |
| ११२ | ७ | ज्वालेव विभ्रमः | ज्वालेतिवद्भ्रमः |
| " | ८ | *विषयविषयिणो | विषयवद्विषयिणो |
| ११८ | ६ | *जडान्ध | जडोन्ध |
| १२० | २२ | *का. उ. ३-४ | कौ. उ. ३-४ |
| " | " | *का. उ. ३-३ | कौ. उ. ३-३ |
| १२१ | १५ | *तस्याः प्रयोजनम् | तस्याश्च कारणम् |
| १२४ | १७ | अनुधाव | खुरधाव |
| १३१ | १५ | त्पाद् एवोपक्षयाद | त्पादकत्वापेक्षया तद |
| १३३ | ३ | धर्मा | धर्म |
| १३५ | " | के | तिमिरान्धकदृष्टीनां यथा केशोण्डूकादि खे । स्फुरत्येवं जगद्रूपमनात्मन्येव तिष्ठति ॥इति वासिष्ठे । के |
| १३६ | ६ | स्वार्थे कः(?)वतिप्रत्ययः | स्वार्थे कप्रत्ययः [स्वार्थिको वतिप्रत्ययः] |

*एतच्चिह्नयुतमशुद्धं वेदितव्यम्.

| पुटे. | पङ्क्तौ. | स्थाने. | पाठ्यम्. |
|---|---|---|---|
| १३७ | १ | वस्तु | प्रत्यभिज्ञायत इति ॥ वस्तु |
| १३ | ६ | सेन | से हि |
| ,, | ,, | पाद्य | पद्य |
| ,, | १० | *गम्य | गम |
| १४६ | १ | त्कश्चि | त्कैश्चि |
| ,, | २ | भ्रमत्तप | भ्रमार्तः प |
| १४८ | १० | अनुमेयासु न मनः क्षिप्रमारोहतीत्यतः | अमेयासु मनः क्षिप्रमारोढुं नार्हतीत्यतः |
| ,, | १३ | अनुमेया | अमेया |
| १५० | १ | *पिण्डं ब्र | पिण्डब्र |
| १५१ | १७ | *विशेषप्र | विशेषसंपादनप्र |
| १५२ | १९ | *ब्रह्याण्ड | ब्रह्माण्ड |
| १५३ | ७ | विशत् | विशेत् |
| १५९ | ६ | *प्रकृत्य । | प्रकृत्य |
| ,, | १६ | तपाग्नि | तपादि |
| १६० | ,, | भासवत् | भाववत् |
| १६३ | ३ | प्रणव[वः]ब्रह्मस्वरूपनित्य | प्रणवब्रह्मस्वरूपं नित्यं |
| ,, | ४ | स्तः, उ | उ |
| १६५ | ६ | नेपि | ने हि |
| १६८ | ,, | रीवि | रीवनगिरिवि |
| ,, | १५ | योगिनां क्ष्मापत्यादिवशीकरणं | शिवयोगिनां सर्ववशित्वं |
| ,, | १९ | भावनामाहात्म्येन यद्यदभिलषितं तत्तदखिलं | सदाशिवात्मध्याननिष्ठाफलं भवेदपि तु सर्वमेव सदा |
| १६९ | ४ | मतिः कार्येत्यु | मति कुर्यादिति प्राणिनो हितमु |
| ,, | १० | न मनुते इत्यत आह | पि न मन्यते तत्राह |
| ,, | १५ | देव इति ॥ | देव इति ॥ श्रुतिरेवैषा |
| १७० | ११ | मद्दक्षिणाशामुखादिशवः | मद्दक्षिणामूर्तिरीश्वरः |
| ,, | १२ | प्रीयतां भजतां | गुर्वात्मा प्रीयतां |

पञ्चीकरणवार्तिके ४७ श्लोके ‘ स्य उ ’ स्थाने ‘ स्स्यादु ’ इति पाठ्यम्.

---

*एतच्चिह्नयुतमशुद्धं वेदितव्यम्.